## ॥ ऋद्धिस्तवः ॥

श्रीमन्वृषभशैलेश वर्धतां विजयी भवान् ।
दिव्यं त्वदीयमैश्वर्यं निर्मर्यादं विजृम्भताम् ॥ १॥

देवीभूषायुधैर्नित्यैर्मुक्तैर्मोक्षैकलक्षणैः ।
सत्त्वोत्तरैस्त्वदीयैश्च सङ्गः स्तात्सरसस्तव ॥ २॥

प्राकारगोपुरवरप्रासादमणिमण्टपाः ।
शालिमुद्गतिलादीनां शालाश्शैलकुलोज्ज्वलाः ॥ ३॥

रत्नकाञ्चनकौशेयक्षौमक्रमुकशालिकाः ।
शय्यागृहाणि पर्यङ्कवर्याः स्थूलासनानि च ॥ ४॥

कनत्कनकभृङ्गारपतद्ग्रहकलाचिकाः ।
छत्रचामरमुख्याश्च सन्तु नित्याः परिच्छदाः ॥ ५॥

अस्तु निस्तुलमव्यग्रं नित्यमभ्यर्चनं तव ।
पक्षेपक्षे विवर्धन्तां मासिमासि महोत्सवाः ॥ ६॥

मणिकाञ्चनचित्राणि भूषणान्यम्बराणि च ।
काश्मीरसारकस्तूरीकर्पूराद्यनुलेपनम् ॥ ७॥

कोमलानि च दामानि कुसुमैस्सौरभोत्करैः ।
धूपाः कर्पूरदीपाश्च सन्तु सन्ततमेव ते ॥ ८॥

नृत्तगीतयुतं वाद्यं नित्यमत्र विवर्धताम् ।
श्रोत्रेषु[च] सुधाधाराः कल्पन्तां काहलीस्वनाः ॥ ९॥

कन्दमूलफलोदग्रं कालेकाले चतुर्विधम् ।
सूपापूपघृतक्षीरशर्करासहितं हविः ॥ १०॥

घनसारशिलोदग्रैः क्रमुकाष्टदलैस्सह ।
विमलानि च ताम्बूलीदलानि स्वीकुरु प्रभो ॥ ११॥

प्रीतिभीतियुतो भूयाद्भूयान् परिजनस्तव ।
भक्तिमन्तो भजन्तु त्वां पौरा जानपदास्तथा ॥ १२॥

वरणीधनरत्नानि वितरन्तु चिरं तव ।
कैङ्कर्यमखिलं सर्वे कुर्वन्तु क्षोणिपालकाः ॥ १३॥

प्रेमदिग्धदृशः स्वैरं प्रेक्षमाणास्त्वदाननम् ।
महान्तस्सन्ततं सन्तो मङ्गलानि प्रयुञ्जताम् ॥ १४॥

एवमेव भवेन्नित्यं पालयन् कुशली भवान् ।
मामहीरमण श्रीमान् वर्धतामभिवर्धताम् ॥ १५॥

पत्युः प्रत्यहमित्थं यः प्रार्थयेत समुच्छ्यम् ।
प्रसादसुमुखः श्रीमान् पश्यत्येनं परः पुमान् ॥ १६॥

॥ इति ऋद्धिस्तवः सम्पूर्णः ॥